# ॥ श्रीमद्वाल्मीकीयरामायणामृतश्लोकावलिः ॥

**1. बालकाण्डः —**

तपःस्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥1.1॥
कोऽन्वस्मिन् साम्प्रतं लोके गुणवान् कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवाक्यो दृढव्रतः ॥1.2॥
चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान् कः कः समर्थश्च कश्चैकप्रियदर्शनः ॥1.3॥
आत्मवान् को जितक्रोधो द्युतिमान् कोऽनसूयकः ।
कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे ॥1.4॥
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ।
महर्षे त्वं समर्थोऽसि ज्ञातुमेवंविधं नरम् ॥1.5॥
इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ॥1.8॥
न च तेन विना निद्रां लभते पुरुषोत्तमः ।
मृष्टमन्नमुपानीतमश्नाति न हि तं विना ॥18.31॥
मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः ।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम् ॥2.15॥
जगावन्तर्गतमना भूत्वा शोकपरायणः ॥2.29॥
तमुवाच ततो ब्रह्मा प्रहसन् मुनिपुङ्गवम् ।
श्लोक एव त्वया बद्धो नात्र कार्या विचारणा ॥2.30॥
मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ।
रामस्य चरितं सर्वं कुरु त्वमृषिसत्तम ॥2.31॥
धर्मात्मनो गुणवतो लोके रामस्य धीमतः ।
वृत्तं कथय धीरस्य यथा ते नारदाच्छ्रुतम् ॥2.32॥
रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः ।
रामस्य सहसौमित्रेः राक्षसानां च सर्वशः ॥2.33॥
वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः ।
तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥2.34॥
न ते वागनृता काव्ये काचिदत्र भविष्यति ।
कुरु रामकथां पुण्यां श्लोकबद्धां मनोरमाम् ॥2.35॥
कुशीलवौ तु धर्मज्ञौ राजपुत्रौ यशस्विनौ ।
भ्रातरौ स्वरसम्पन्नौ ददर्शाश्रमवासिनौ ॥4.5॥
रूपलक्षणसम्पन्नौ मधुरस्वरभाषिणौ ।
बिम्बादिवोद्धृतौ बिम्बौ रामदेहात्तथाऽपरौ ॥4.11॥
स चापि रामः परिषद्गतः शनैर्बुभूषयासक्तमना बभूव ॥4.31॥
पुत्राश्चास्य भविष्यन्ति चत्वारोऽमितविक्रमाः ।
वंशप्रतिष्ठानकराः सर्वलोकेषु विश्रुताः ॥11.10॥
एतच्छ्रुत्वा प्रियं वाक्यं ब्रह्मणा समुदाहृतम् ।
सर्वे महर्षयो देवाः प्रहृष्टास्तेऽभवंस्तदा ॥15.15॥
त्वां नियोक्ष्यामहे विष्णो लोकानां हितकाम्यया ॥15.18॥
ततो नारायणो देवो नियुक्तः सुरसत्तमैः ।
जानन्नपि सुरानेवं श्लक्ष्णं वचनमब्रवीत् ॥16.1॥
पितरं रोचयामास तदा दशरथं नृपम् ॥16.87॥
कौसल्या शुशुभे तेन पुत्रेणामिततेजसा ।
यथा वरेण देवानामदितिर्वज्रपाणिना ॥18.12॥
प्रदेयांश्च ददौ राजा सूतमागधवन्दिनाम् ।
ब्राह्मणेभ्यो ददौ वित्तं गोधनानि सहस्रशः ॥18.20॥
यदा हि हयमारूढो मृगयां याति राघवः ।
तदैनं पृष्ठतोऽन्वेति सधनुः परिपालयन् ॥18.31॥
भरतस्यापि शत्रुघ्नो लक्ष्मणावरजो हि सः ।
प्राणैः प्रियतरो नित्यं तस्य चासीत्तथा प्रियः ॥18.32॥
इच्छाम्यनुगृहीतोऽहं त्वदर्थपरिवृद्धये ।
कार्यस्य न विमर्शं च गन्तुमर्हसि कौशिक ॥18.55॥
सदृशं राजशार्दूल तवैतद्भुवि नान्यथा ।
महावंशप्रसूतस्य वसिष्ठव्यपदेशिनः ॥19.2॥
अहं वेद्मि महात्मानं रामं सत्यपराक्रमम् ।
वसिष्ठोऽपि महातेजा ये चेमे तपसि स्थिताः ॥19.14॥
एवं वीर्यो महातेजा विश्वामित्रो महायशाः ।
न रामगमने राजन् संशयं कर्तुमर्हसि ॥21.19॥
तेषां निग्रहणे शक्तः स्वयं च कुशिकात्मजः ।
तव पुत्रहितार्थाय त्वामुपेत्याभियाचते ॥21.20॥
कुमारौ चारुवपुषौ भ्रातरौ रामलक्ष्मणौ ।
अनुयातौ श्रिया दीप्तौ शोभयेतामनिन्दितौ ॥22.9॥
कौसल्या सुप्रजा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठ नरशार्दूल कर्तव्यं दैवमाह्निकम् ॥23.2॥
तस्मादेनां घृणां त्यक्त्वा जहि मच्छासनान् नृप ॥25.22॥
परितुष्टोऽस्मि भद्रं ते राजपुत्र महायशः ।
प्रीत्या परमया युक्तो ददाम्यस्त्राणि सर्वशः ॥27.2॥
देवासुरगणान् वापि सगन्धर्वोरगानपि ।
यैरमित्रान् प्रसह्याजौ वशीकृत्य जयिष्यसि ॥27.3॥
कृतार्थोऽस्मि महाबाहो कृतं गुरुवचस्त्वया ।
सिद्धाश्रममिदं सत्यं कृतं राम महायशः ॥30.26॥
भगवन् कोऽन्वयं देशः समृद्धवनशोभितः ॥31.24॥
सुप्रभाता निशा राम पूर्वा सन्ध्या प्रवर्तते ।
उत्तिष्ठोत्तिष्ठ भद्रं ते गमनायाभिरोचय ॥35.2॥
किमर्थं च मुनिश्रेष्ठ सम्प्राप्तौ दुर्गमे पथि ।
वरायुधधरौ वीरौ श्रोतुमिच्छामि तत्त्वतः ॥48.6॥
यदा चैतद्वनं घोरं रामो दशरथात्मजः ।
आगमिष्यति दुर्धर्षस्तदा पूता भविष्यसि ॥48.31॥
तदागच्छ महातेज आश्रमं पुण्यकर्मणः ।
तारयैनां महाभागामहल्यां देवरूपिणीम् ॥49.12॥
गौतमोऽपि महातेजा अहल्यासहितः सुखी ।
रामं सम्पूज्य विधिवत्तपस्तेपे महातपाः ॥49.22॥

देशो विधीयतां ब्रह्मन् यत्र वत्स्यामहे वयम् ॥50.4॥
यदृच्छयैव गां प्राप्तौ देवलोकादिवामरौ ।
कथं पद्भ्यामिह प्राप्तौ किमर्थं कस्य वा मुने ॥50.19॥
धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ।
एकेन ब्रह्मदण्डेन सर्वास्त्राणि हतानि मे ॥56.23॥
तदेतत्समवेक्ष्याहं प्रसन्नेन्द्रियमानसः ।
तपो महत्समास्थास्ये यद्वै ब्रह्मत्वकारणम् ॥56.24॥
एष राम मुनिश्रेष्ठ एष विग्रहवांस्तपः ।
एष धर्मपरो नित्यं वीर्यस्यैष परायणम् ॥65.28॥
पुत्रौ दशरथस्येमौ क्षत्रियौ लोकविश्रुतौ ।
द्रष्टुकामौ धनुः श्रेष्ठं यदेतत्त्वयि तिष्ठति ॥66.5॥
एतद्दर्शय भद्रं ते कृतकामौ नृपात्मजौ ।
दर्शनादस्य धनुषो यथेष्टं प्रतियास्यतः ॥66.6॥
यद्यस्य धनुषो रामः कुर्यादारोपणं मुने ।
सुतामयोनिजां सीतां दद्यां दाशरथेरहम् ॥66.26॥
आरोपयित्वा धर्मात्मा पूरयामास तद्धनुः ।
तद्बभञ्ज धनुर्मध्ये नरश्रेष्ठो महायशाः ॥67.17॥
जनकानां कुले कीर्तिमाहरिष्यति मे सुता ।
सीता भर्तारमासाद्य रामं दशरथात्मजम् ॥67.22॥
प्रतिग्रहो दातृवशः श्रुतमेतन्मया पुरा ।
यथा वक्ष्यसि धर्मज्ञ तत्करिष्यामहे वयम् ॥69.14॥
धर्मिष्ठं च यशस्यं च वचनं सत्यवादिनः ।
श्रुत्वा विदेहाधिपतिः परं विस्मयमागतः ॥69.15॥
कुलं धन्यमिदं मन्ये येषां नो मुनिपुङ्गवौ ।
सदृशं कुलसम्बन्धं यदाज्ञापयथः स्वयम् ॥72.10॥
एवं भवतु भद्रं वः कुशध्वजसुते इमे ।
पत्न्यौ भजेतां सहितौ शत्रुघ्नभरतावुभौ ॥72.11॥
यथा दशरथस्येयं तथाऽयोध्या पुरी मम ।
प्रभुत्वे नास्ति सन्देहो यथार्हं कर्तुमर्हथ ॥72.16॥
कः स्थितः प्रतिहारो मे कस्याज्ञा सम्प्रतीक्ष्यते ।
स्वगृहे को विचारोऽस्ति यथा राज्यमिदं तव ॥73.14॥
कृतकौतुकसर्वस्वा वेदिमूलमुपागताः ।
मम कन्या मुनिश्रेष्ठ दीप्ता वह्नेरिवार्चिषः ॥73.15॥
सज्जोऽहं त्वत्प्रतीक्षोऽस्मि वेद्यामस्यां प्रतिष्ठितः ।
अविघ्नं कुरुतां राजा किमर्थमवलम्बते ॥73.16॥
अब्रवीज्जनको राजा कौसल्यानन्दवर्धनम् ॥73.26॥
इयं सीता मम सुता सहधर्मचरी तव ।
प्रतीच्छ चैनां भद्रं ते पाणिं गृह्णीष्व पाणिना ॥73.27॥
पतिव्रता महाभागा छायेवानुगता सदा ॥73.28॥
ब्राह्मणोऽसीति पूज्यो मे विश्वामित्रकृतेन च ।
तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम् ॥76.6॥
देवताभिः समा रूपे सीता श्रीरिव रूपिणी ॥77.31॥

**2. अयोध्याकाण्डः —**

स तु नित्यं प्रशान्तात्मा मृदुपूर्वं च भाषते ।
उच्यमानोऽपि परुषं नोत्तरं प्रतिपद्यते ॥1.10॥
कथञ्चिदुपकारेण कृतेनैकेन तुष्यति ।
न स्मरत्यपकाराणां शतमप्यात्मवत्तया ॥1.11॥
शीलवृद्धैर्ज्ञानवृद्धैर्वयोवृद्धैश्च सज्जनैः ।
कथयन्नास्त वै नित्यमस्त्रयोग्यान्तरेष्वपि ॥1.12॥
बुद्धिमान्मधुराभाषी पूर्वभाषी प्रियंवदः ।
वीर्यवान्न च वीर्येण महता स्वेन विस्मितः ॥1.13॥
नचानृतकथो विद्वान् वृद्धानां प्रतिपूजकः ।
अनुरक्तः प्रजाभिश्च प्रजाश्चाप्यनुरञ्जते ॥1.14॥
नाऽऽश्रेयसि रतो विद्वान्न विरुद्धकथारुचिः ।
उत्तरोत्तरयुक्तौ च वक्ता वाचस्पतिर्यथा ॥1.17॥
अरोगस्तरुणो वाग्मी वपुष्मान् देशकालवित् ।
लोके पुरुषसारज्ञः साधुरेको विनिर्मितः ॥1.18॥
दृढभक्तिः स्थिरप्रज्ञो नासद्ग्राही न दुर्वचाः ।
निस्तन्द्रिरप्रमत्तश्च स्वदोषपरदोषवित् ॥1.24॥
शास्त्रज्ञश्च कृतज्ञश्च पुरुषान्तरकोविदः ।
यः प्रग्रहानुग्रहयोर्यथान्यायं विचक्षणः ॥1.25॥
सत्सङ्ग्रहप्रग्रहणे स्थानविन्निग्रहस्य च ।
आयकर्मण्युपायज्ञः सन्दृष्टव्ययकर्मवित् ॥1.26॥
स रामं युवराजानमभिषिञ्चस्व पार्थिवम् ॥2.21॥
कथं नु मयि धर्मेण पृथिवीमनुशासति ।
भवन्तो द्रष्टुमिच्छन्ति युवराजं ममात्मजम् ॥2.25॥
व्यसनेषु मनुष्याणां भृशं भवति दुःखितः ॥2.40॥
स्मितपूर्वाभिभाषी च धर्मं सर्वात्मना श्रितः ।
सम्यग्योक्ता श्रेयसां च न विगृह्य कथारुचिः ॥2.42॥
तं देव देवोपमात्मजं ते सर्वस्य लोकस्य हिते निविष्टम् ।
हिताय नः क्षिप्रमुदारजुष्टं मुदाऽभषेक्तुं वरद त्वमर्हसि ॥2.54॥
अहोऽस्मि परमप्रीतः प्रभावश्चातुलो मम ।
यन्मे ज्येष्ठं प्रियं पुत्रं यौवराज्यस्थमिच्छथ ॥3.2॥
वत्स राम चिरं जीव हतास्ते परिपन्थिनः ॥4.39॥
तव दुःखेन कैकेयि मम दुःखं महद्भवेत् ॥7.22॥
रामे वा भरते वाऽहं विशेषं नोपलक्षये ।
तस्मात्तुष्टाऽस्मि यद्राजा रामं राज्येऽभिषेक्ष्यति ॥7.35॥
ध्रुवं तु भरतं रामः प्राप्य राज्यमकण्टकम् ।
देशान्तरं वा नयिता लोकान्तरमथाऽपि वा ॥8.27॥
एवं प्रव्राजितश्चैव रामोऽरामो भविष्यति ।
भरतश्च हतामित्रस्तव राजा भविष्यति ॥9.33॥
धर्मबन्धेन बध्दोऽस्मि नष्टा च मम चेतना ।
ज्येष्ठं पुत्रं प्रियं रामं द्रष्टुमिच्छामि धार्मिकम् ॥14.24॥
राममानय भद्रं ते नात्र कार्या विचारणा ॥14.64॥

सुमन्त्र रामं द्रक्ष्यामि शीघ्रमानय सुन्दरम् ॥14.65॥
करिष्ये प्रतिजाने च रामो द्विर्नाभिभाषते ॥18.30॥
न वनं गन्तुकामस्य त्यजतश्च वसुन्धराम् ।
सर्वलोकातिगस्येव लक्ष्यते चित्तविक्रिया ॥19.33॥
यदि त्वं प्रस्थितो दुर्गं वनमद्यैव राघव ।
अग्रतस्ते गमिष्यामि मृद्नन्ती कुशकण्टकान् ॥27.7॥
किं त्वाऽमन्यत वैदेहः पिता मे मिथिलाधिपः ।
राम जामातरं प्राप्य स्त्रियं पुरुषविग्रहम् ॥30.3॥
अनुगच्छस्व मां भीरु सहधर्मचरी भव ॥30.40॥
अहं राघव कैकेय्या वरदानेन मोहितः ।
अयोध्यायास्त्वमेवाद्य भव राजा निगृह्य माम् ॥34.26॥
सुमित्रा गच्छ गच्छेति पुनः पुनरुवाच तम् ॥40.8॥
रामं दशरथं विद्धि मां विद्धि जनकात्मजाम् ।
अयोध्यामटवीं विध्दि गच्छ तात यथासुखम् ॥40.9॥
सद्यः शरीरे विननाश शोकः शरद्गतो मेघ इवाल्पतोयः ॥44.31॥
न च सीता त्वया हीना न चाहमपि राघव ।
मुहूर्तमपि जीवावो जलान्मत्स्याविनोद्धृतौ ॥53.31॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयं ।
यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ॥103.30॥

**3. अरण्यकाण्डः —**

ते वयं भवता रक्ष्या भवद्विषयवासिनः ।
नगरस्थो वनस्थो वा त्वं नो राजा जनेश्वरः ॥1.20॥
न्यस्तदण्डा वयं राजञ्जितक्रोधा जितेन्द्रियाः ।
रक्षणीयास्त्वया शश्वद् गर्भभूतास्तपोधनाः ॥1.21॥
स्नेहाच्च बहुमानाच्च स्मारये त्वां न शिक्षये ॥9.25॥
अप्यहं जीवितं जह्यां त्वां वा सीते सलक्ष्मणाम् ।
न तु प्रतिज्ञां संश्रुत्य ब्राह्मणेभ्यो विशेषतः ॥10.19॥
अलङ्कृतोऽयं देशश्च यत्र सौमित्रिणा सह ।
वैदेह्या चानया राम वत्स्यसि त्वमरिन्दम ॥13.8॥
आश्रमः कतरस्मिन्नो देशे भवति सम्मतः ॥15.3॥
स्वयं तु रुचिरे देशे क्रियतामिति मां वद ॥15.7॥
इहाश्रमपदं सौम्य यथावत् कर्तुमर्हसि ॥15.10॥
भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण।
त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥15.29॥
न तेऽम्बा मध्यमा तात गर्हितव्या कथञ्चन ।
तामेवेक्ष्वाकुनाथस्य भरतस्य कथां कुरु ॥16.37॥
कदा ह्यहं समेष्यामि भरतेन महात्मना ।
शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन ॥16.40॥
रामो नाम महातेजा श्रेष्ठः सर्वधनुष्मताम् ।
दिव्यास्त्रगुणसम्पन्नः पुरन्दरसमो युधि ॥31.15॥
सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥37.2॥
रामो विग्रहवान् धर्मः साधुः सत्यपराक्रमः ।
राजा सर्वस्य लोकस्य देवानां मघवानिव ॥37.13॥
अहं तस्य प्रभावज्ञो न युद्धं तेन ते क्षमम् ।
बलिं वा नमुचिं वापि हन्याद्धि रघुनन्दनः ॥39.18॥
रणे रामेण युद्ध्यस्व क्षमां वा कुरु राक्षस ।
न ते रामकथा कार्या यदि मां द्रष्टुमिच्छसि ॥39.19 ॥
राज्ञो हि प्रतिकूलस्थो न जातु सुखमेधते ॥40.26॥
परेतकल्पा हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥41.20॥
रामं विना क्षणमपि न हि जीवामि भूतले ॥45.26॥
उत्तरं नोत्सहे वक्तुं दैवतं भवती मम ॥45.28॥
मामेव हि पुरा राम त्वमेवं बहुशोऽन्वशाः ।
अनुशिष्याद्धि को नु त्वामपि साक्षाद् बृहस्पतिः ॥66.17॥
सीताहरणजं दुःखं न मे सौम्य तथाविधम् ।
यथा विनाशे गृध्रस्य मत्कृते च परन्तप ॥68.25॥
राघवः प्राह विज्ञाने तां नित्यमबहिष्कृताम् ॥74.18॥

**4. किष्किन्धाकाण्डः —**

अहं चैव हि रामश्च सुग्रीवं शरणं गतौ ॥4.17॥
भिक्षुरूपं परित्यज्य वानरं रूपमास्थितः ।
पृष्ठमारोप्य तौ वीरौ जगाम कपिकुञ्जरः ॥4.34॥
रोचते यदि वा सख्यं बाहुरेष प्रसारितः ।
गृह्यतां पाणिना पाणिर्मर्यादा बध्यतां ध्रुवा ॥5.12॥
सम्प्रहृष्टमना हस्तं पीडयामास पाणिना ।
हृष्टः सौहृदमालम्ब्य पर्यष्वजत पीडितम् ॥5.13॥
नाहं जानामि केयूरे नाहं जानामि कुण्डले ।
नूपुरे त्वभिजानामि नित्यं पादाभिवन्दनात् ॥6.22॥
अहं त्ववगतो बुद्ध्या चिह्नैस्तैर्भ्रातरं हतम् ।
पिधाय च बिलद्वारं शिलया गिरिमात्रया ॥9.19॥
आत्मानुमानात् पश्यामि मग्नं त्वां शोकसागरे ।
त्वामहं तारयिष्यामि कामं प्राप्स्यसि पुष्कलम् ॥10.34॥
वालिनं जहि काकुत्स्थ मया बद्धोऽयमञ्जलिः ॥12.11॥
धर्मज्ञश्च कृतज्ञश्च कथं पापं करिष्यति ॥16.5॥
सुग्रीवः कथ्यतां वत्स ममागमनमित्युत ॥31.32॥
इत्युक्त्वा शीघ्रमागच्छ वत्स वाक्यमरिन्दम ॥31.34॥
गोघ्ने च सुरापे च चौरे भग्नव्रते तथा ।
निष्कृतिर्विहिता सद्भिः कृतघ्ने नास्ति निष्कृतिः ॥34.12॥
अवश्यं क्रियमाणस्य दृश्यते कर्मणः फलम् ।
अलं निर्वेदमागम्य न हि नो मीलनं क्षमम् ॥49.8॥
मनः समाधाय महानुभावो जगाम लङ्कां मनसा मनस्वी ॥67.50॥

**5. सुन्दरकाण्डः —**

साधयार्थमभिप्रेतमरिष्टं प्लवतां वर ॥1.200॥

मनो हि हेतुः सर्वेषामिन्द्रियाणां प्रवर्तने ।
शुभाशुभास्ववस्थासु तच्च मे सुव्यवस्थितम् ॥11.41॥
अनिर्वेदः श्रियो मूलमनिर्वेदः परं सुखम् ।
अनिर्वेदो हि सततं सर्वार्थेषु प्रवर्तकः ॥12.10॥
नैषा पश्यति राक्षस्यो नेमान् पुष्पफलद्रुमान् ।
एकस्थहृदया नूनं राममेवानुपश्यति ॥16.25॥
धिगस्तु खलु मानुष्यं धिगस्तु परवश्यताम् ।
न शक्यं यत्परित्यक्तुमात्मच्छन्देन जीवितम् ॥25.20॥
नाहमस्मि तथा देवि यथा मामवगच्छसि ।
विशङ्का त्यज्यतामेषा श्रद्धत्स्व वदतो मम ॥34.41॥
क्व ते रामेण संसर्गः कथं जानासि लक्ष्मणम् ।
वानराणां नराणां च कथमासीत् समागमः ॥35.2॥
स सुवर्णच्छविः श्रीमान् रामः श्यामो महायशाः (?)
तावुभौ नरशार्दूलौ त्वद्दर्शनसमुत्सुकौ ॥35.23॥
वानरोऽहं महाभागे दूतो रामस्य धीमतः ।
रामनामाङ्कितं चेदं पश्य देव्यङ्गुलीयकम् ॥36.2॥
प्रत्ययार्थं तवाऽनीतं तेन दत्तं महात्मना ।
समाश्वसिहि भद्रं ते क्षीणदुःखफला ह्यसि ॥36.3॥
कच्चिन्नान्यमना रामः कच्चिन् मां तारयिष्यति ॥36.23॥
अनिद्रः सततं रामः सुप्तोऽपि च नरोत्तमः ।
सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते ॥36.44॥
त्वां तु पृष्टगतां कृत्वा सन्तरिष्यामि सागरम् (?)
कथं वाऽल्पशरीरस्त्वं मामितो नेतुमिच्छसि ।
सकाशं मानवेन्द्रस्य भर्तुर्मे प्लवगर्षभ ॥37.30॥
भर्तुर्भक्तिं पुरस्कृत्य रामादन्यस्य वानर ।
नाहं स्प्रष्टुं स्वतो गात्रमिच्छेयं वानरस्तव ॥37.62॥
यदि रामो दशग्रीवमिह हत्त्वा सबान्धवम् ।
मामितो गृह्य गच्छेत तत्तस्य सदृशं भवेत् ॥37.62॥
मत्कृते काकमात्रे तु ब्रह्मास्त्रं समुदीरितम् ।
कस्माद्यो मां हरेत्त्वत्तः क्षमसे तं महीपते ॥38.39॥
जयत्यतिबलो रामो लक्ष्मणश्च महाबलः ।
राजा जयति सुग्रीवो राघवेणाभिपालितः ॥42.33॥
दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः ।
हनुमान् शत्रुसैन्यानां निहन्ता मारुतात्मजः ॥42.34॥
न रावणसहस्रं मे युद्धे प्रतिबलं भवेत् ।
शिलाभिस्तु प्रहरतः पादपैश्च सहस्रशः ॥42.35॥
अर्दयित्वा पुरीं लङ्कामभिवाद्य च मैथिलीम् ।
समृद्धार्थो गमिष्यामि मिषतां सर्वरक्षसाम् ॥42.36॥
मन्यस्व नरदेवाय जानकी प्रतिदीयताम् ॥51.21॥
आज्ञापयद् वधं तस्य रावणः क्रोधमूर्छितः ॥52.1॥
यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः ।
यदि चास्त्येकपत्नीत्वं शीतो भव हनूमतः ॥53.28॥
सीतायाश्चानृशंस्येन तेजसा राघवस्य च ।
पितुश्च मम सख्येन न मां दहति पावकः ॥53.38॥
नाकार्यमस्ति क्रुद्धस्य नावाच्यं विद्यते क्वचित् ॥55.5॥
त्वं समेष्वसि रामेण शशाङ्केनेव रोहिणी ॥39.45॥
अशोकवनिकासंस्था दृष्टा सा जनकात्मजा ॥57.38॥
हत्वा च समरे रौद्रं रावणं सह बान्धवम् ।
राघवस्त्वां वरारोहे स्वां पुरीं नयते ध्रुवम् ॥67.28॥
उवाह शान्तिं मम मैथिलात्मजा
तवापि शोकेन तदाभिपीडिता ॥68.29॥

**6. युद्धकाण्डः —**

कृतं हनुमता कार्यं सुमहद् भुवि दुर्लभम् ।
मनसापि यदन्येन न शक्यं धरणीतले ॥1.2॥
शोकः सर्वार्थनाशनः (2.17)। क्रोधमालम्ब्य भूपते (2.21)
अस्मिन् मुहूर्ते सुग्रीव प्रयाणमभिरोचये ॥4.3॥
स्वस्ति तेऽस्तु गमिष्यामि सुखी भव मया विना ॥16.25॥
त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः ॥17.16॥
निवेदयत मां क्षिप्रं राघवाय महात्मने ।
सर्वलोकशरण्याय विभीषणमुपस्थितम् ॥17.17॥
मित्रभावेन सम्प्राप्तं न त्यजैनं कथञ्चन ।
दोषो यद्यपि तस्य स्यात् सतामेतदगर्हितम् ॥18.3॥
सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥18.20॥
महाबलं महात्मानं दुराधर्षं सुरैरपि ।
न बुध्यसे रघुश्रेष्ठं यस्ते प्राणान् हरिष्यति ॥20.30॥
जयस्व शत्रून् नरदेव मेदिनीं
ससागरां पालय शाश्वतीः समाः ॥22.90॥
कुरुष्व नरराजेन सन्धिं रामेण रावण ॥35.38॥
द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् ।
एष मे सहजो दोषः स्वभावो दुरतिक्रमः ॥36.19॥
तदद्य विपुलं वीर दुःखमिन्द्रजिता कृतम् ।
कर्मणा व्यपनेष्यामि तस्मादुत्तिष्ठ राघव ॥83.32॥
उद्यमः क्रियतां वीर हर्षः समुपसेव्यताम् ।
प्राप्तव्या वदि ते सीता हन्तव्याश्च निशाचराः ॥85.9॥
जीवितान्तकरैर्घोरैः सौमित्रे रावणिं जहि ॥86.34॥
तयोः समभवद् युद्धमद्भुतं रोमहर्षणम् ।
गगनस्थानि भूतानि लक्ष्मणं पर्यवारयन् ॥91.62॥
त्यजेमां नरशार्दूल बुद्धिं वैक्लव्यकारिणीम् ॥101.24॥
मरणान्तानि वैराणि निवृत्तं नः प्रयोजनम् ।
क्रियतामस्य संस्कारो ममाप्येष यथा तव ॥111.100॥
अर्थतश्च मया प्राप्ता देवराज्यादयो गुणाः ।
हतशत्रुं विजयिनं रामं पश्यामि सुस्थितम् ॥113.34॥
पापानां वाशुभानां वा वधार्हाणामथापि वा ।

कार्ये कारुण्यमार्गेण न कश्चिन्नापराध्यति ॥113.44॥
तां देवीं शोकसन्तप्तां द्रष्टुमर्हसि मैथिलीम् ॥114.2॥
न गृहाणि न वस्त्राणि न प्राकारास्तिरस्क्रियाः ।
नेदृशा राजसत्कारा वृत्तमावरणं स्त्रियाः ॥114.27॥
यथा मे हृदयं नित्यं नापसर्पति राघवात् ।
तथा लोकस्य साक्षी मां सर्वतः पातु पावकः ॥116.25॥
अमोघं दर्शनं राम अमोघस्तव संस्तवः ।
अमोघास्ते भविष्यन्ति भक्तिमन्तो नरा भुवि ॥117.32॥
अयोध्यां गच्छतो ह्येष पन्थाः परमदुर्गमः ॥121.7॥
उपस्थापय मे शीघ्रं विमानं राक्षसेश्वर ॥121.22॥
अत्र पूर्वं महादेवः प्रसादमकरोद् विभुः ॥123.22॥
देवो वा मानुषो वा त्वमनुक्रोशादिहागतः ।
प्रियाख्यानस्य ते सौम्य ददामि ब्रुवतः प्रियम् ॥125.43॥
स्वागतं ते महाबाहो कौसल्यानन्दवर्धन ॥127.48॥
पूजिता मामिका माता दत्तं राज्यमिदं मम ।
तद् ददामि पुनस्तुभ्यं यथा त्वमददान्मम ॥128.2॥
प्रहृष्टमनसः सर्वे जग्मुरेव यथागतम् ॥128.87॥
रामो रामो राम इति प्रजानामभवन् कथाः ।
रामभूतं जगदभूद् रामे राज्यं प्रशासति ॥ (?)

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

- - - - (रामराज्यवर्णनं बालकाण्डे प्रथमे सर्गे—)

प्रहृष्टमुदितो लोकस्तुष्टः पुष्टः सुधार्मिकः ।
निरामयो ह्यरोगश्च दुर्भिक्षभयवर्जितः ॥1.1.90॥
न पुत्रमरणं किञ्चिद् द्रक्ष्यन्ति पुरुषाः क्वचित् ।
नार्यश्चाविधवा नित्यं भविष्यन्ति पतिव्रताः ॥1.1.91॥
न चाग्निजं भयं किञ्चिन्नाप्सु मज्जन्ति जन्तवः ।
न वातजं भयं किञ्चिन्नापि ज्वरकृतं तथा ॥1.1.92॥
न चापि क्षुद्भयं तत्र न तस्करभयं तथा ।
नगराणि च राष्ट्राणि धनधान्ययुतानि च ॥1.1.93॥
नित्यं प्रमुदिताः सर्वे यथा कृतयुगे तथा ।
अश्वमेधशतैरिष्ट्वा तथा बहुसुवर्णकैः ॥1.1.94॥
गवां कोट्ययुतं दत्वा ब्रह्मलोकं प्रयास्यति ।
असङ्ख्येयं धनं दत्वा ब्राह्मणेभ्यो महायशाः ॥1.1.95॥
राजवंशान् शतगुणान् स्थापयिष्यति राघवः ।
चातुर्वर्ण्यं च लोकेऽस्मिन् स्वे स्वे धर्मे नियोक्ष्यति ॥1.1.96॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
रामो राज्यमुपासित्वा ब्रह्मलोकं प्रयास्यति ॥1.1.97॥

(फलश्रुतिस्तत्रैव —)

इदं पवित्रं पापघ्नं पुण्यं वेदैश्च सम्मितम् ।
यः पठेद् रामचरितं सर्वपापैः प्रमुच्यते ॥1.1.98॥
एतदाख्यानमायुष्यं पठन् रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ॥1.1.99॥
पठन् द्विजो वागृषभत्वमीयात् स्यात् क्षत्रियो भूमिपतित्वमीयात् ।
वणिग्जनः पण्यफलत्वमीयात् जनश्च शूद्रोऽपि महत्वमीयात् ॥100॥

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

- - - - (अथ लवकुशयोर्मङ्गलाचरणानि शिरोमणिटीकायाम्)

कूजन्तं रामरामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ॥
यः पिबन् सततं रामचरितामृतसागरम् ।
अतृप्तस्तं मुनिं वन्दे प्राचेतसमकल्मषम् ॥
अञ्जनानन्दनं वीरं जानकीशोकनाशनम् ।
कपीशमक्षहन्तारं वन्दे लङ्काभयङ्करम् ॥
यत्र यत्र रघुनाथकीर्तनं तत्र तत्र कृतमस्तकाञ्जलिम् ।
वाष्पवारिपरिपूर्णलोचनं मारुतिं नमत राक्षसान्तकम् ॥
मनोजवं मारुततुल्यवेगं जितेन्द्रियं बुद्धिमतां वरिष्ठम् ।
वातात्मजं वानरयूथमुख्यं श्रीरामदूतं मनसा स्मरामि ॥
रामाय रामभद्राय रामचन्द्राय वेधसे ।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥
वेदवेद्ये परे पुंसि जाते दशरथात्मजे ।
वेदः प्राचेतसादासीत् साक्षाद् रामायणात्मना ॥
वाल्मीकिगिरिसम्भूता रामसागरगामिनी ।
पुनाति भुवनं पुण्या रामायणमहानदी ॥
रामं रामानुजं सीतां भरतं भरतानुजम् ।
सुग्रीवं वायुसूनुं च प्रणमामि पुनः पुनः ॥

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

(अथ श्रीहनुमत्कृतं मङ्गलं सुन्दरकाण्डे)

नमोऽस्तु रामाय सलक्ष्मणाय देव्यै च तस्यै जनकात्मजायै ।
नमोऽस्तु रुद्रेन्द्रयमानिलेभ्यो नमोऽस्तु चन्द्रार्कमरुद्गणेभ्यः॥13.59॥

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -

- - - - (अथैकश्लोकि रामायणं श्रीमद्भागवतोक्तम्)

गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः
पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरीन्द्रानुजाभ्याम् ।
वैरूप्याच्छूर्पणख्याः प्रियविरहरुषाऽऽरोपितभ्रूविजृम्भ-
त्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोसलेन्द्रोऽवतान्नः ॥9.10.4॥

- - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - - -